अनवग्रहम्

मुनिमानसमंथानमथितागमसागरात्
उदिताय नमो भूयादमृताय मुरारये ११९
गुणत्रयविहीनाय जगत्त्रयविधायिने
श्रुतित्रयदिशे शश्वत् पुरत्रयमथे नमः १२०
नमसस्कृत्य विनेतारं विघ्नानामनुशिष्यते
अधुना लक्षणं वक्ष्ये अनवग्रहसंज्ञकम् १२१
इति परिभाषा
त्वमग्ने यज्ञ एह्यू षु त्वामग्ने सु प्रति त्य तु
अग्निं वो आदित् प्रत्नस्याग्निस्तिग्मे युंक्ष्व पाहि नः १२२
श्रुष्ट्यग्ने तु दधन्वेव तदग्ने द्युम्नमिन्द्र तु
त्वमिन्द्र बलवयमिं भिंधीहेवोप नो हवम् १२३
सोमानां स्वर देवानां यदिन्द्रो अन गौर्धया
इन्द्रायम द्वनेऽभि त्वा प्र व इन्द्र महाँ क इ १२४
आयाहि सुषु गव्योषु सदा वारं त इन्द्र तु
इन्द्रमिद् गाथिनो वृ यथा गौर यदिन्द्र ना १२५
एवा ह्यसि विश्रायन्तस्तवेदिन्द्र प्र यो रि तु
आ त्वा सोमस्य यद्यावासावि सोम स पूर्व्य च १२६
यदी वह स घा यस्ते ऋचं सामेन्दुमिन्द्र तु
इन्द्र सुतेषु यत्सोम एष ब्रह्म भगो न चि १२७

सोममहेऽग्निं तं मन्ये ब्रह्मा णेमा नु कं तथा
आ याहि वनसाग्ने त्वं वि स्रु विश्वस्य सृक्षत १२८
स्वादिष्ठयेन्द्रो विश्वस्य वृषा पवस्व धारया
इन्दुः पविः पवस्वेन्दो तिस्रो वाच उदीरते १२९
परि स्वाना सर्जि रथ्यः प्र यद्गाया पवस्व धा
स पवस्वानु प्रत्नास तरत्स म इषे पव १३०
अर्षा सोम मन्द्रया सो प्र न इन्दो प्र गायत
सोम उ ष्वाण पवमाना असृ प्र त्वसर्जि र १३१
सोमः पवास्य प्रेषा हे त्वपामिवे महत्त तु
अयं पूषा सुतासो म परि त्यं प्र पुनान तु १३२
असावि सोमो सोमः प्र पवते हर्यभि द्यु च
एषस्य धेमं वृषणमेना विश्व त्वमेत तु १३३
इन्द्रस्यानु वसन्तश्च हरी ता दृश्र यद्वर्चः
अग्न आयूंषि त्रिंशद्धा एवा ह्येना पवा हि षः १३४
यो मांहिष्ठ आ इ स्तोभं विपश्चितेः प्र सो मदे
वृषा सोम तया पवस्व दे वृषा पवस्व धा १३५
अयं पूषा तु यद्याव तवाहं सो त्वसृक्षत
अर्षा सोम पुनानो अक्र पघ्नन् पव आयुषक् १३६
अया पवस्व चाध्वर्येतो न्विन्द्र मेन्दुमिन्द्र तु
कया त्वं नः सोम मह त्वमिंद्र प्र समस्य तु १३७

इन्द्रमिद्देव पवमाना अ स रेवाँ इ प्रसोऽग्नि रि
अग्निर्जागा त्वेन्द्र याहि यमक्ष इति संख्यकाः १३८
अनवग्रहलक्षणं समाप्तम्

सप्तलक्षणनामायं ग्रन्थः समाप्तिमगमत्